ॐ

# दयास्तुति

## हरी गीतिका छन्द ॥

जय जगत जननी दया देवी ।
सुकृत सुरतरु मंजरी ॥
जय जीव जीवन रक्षिका ।
सद्धर्म धारिणि शंकरी ॥
जय शिष्ट जन की इष्ट देवी ।
अभीष्ट अर्पक सर्वदा ॥
जय भक्त वत्सल भक्त के ।
मन भवन में बसहु सदा ॥१॥
भगवती आप प्रताप तें ।
अति पतित जन पावन भये ॥
स्वर्गादि संपति पाय पुनि ।
अपवर्ग मंदिर में गये ॥
दंदि हेतु दुंदि अघ हारिणी ।
महा मोद मंगल कारिणी ॥
दुःख विघ्न वृंद विदारिणी ।
जय जयति जगदुद्धारिणी ॥२॥

* श्री: *

# उपक्रमणिका ।

पाठकवृन्द !

यह आपको मालूम ही है कि हर एक आदमी जीवरक्षा (दया) को चाहता है और व्याख्यानदाता भी प्रायः अहिंसा और माँस त्याग पर ही अधिक तर व्याख्यान दिया करते हैं और लोग कहा करते हैं कि वेदों में यज्ञ व श्राद्ध के प्रकरणों में हिंसा का ही विधान किया गया है उन लोगों को सप्रमाण तफ़सीलवार मालूम होने व सर्व साधारण के हितार्थ हिन्दू व जैन शास्त्रों के क़रीब क़रीब ५० ग्रन्थों के आधार पर ३२५ श्लोकों की यह पुस्तक संग्रह की गई है इसमें जो श्लोक हैं वे प्रायः मुख्य २ और ग्रन्थों के नाम सहित दिये गये हैं जो विषय सूची से मालूम होसक्ते हैं और वेदादि ग्रन्थों के आधार पर सिद्ध किया गया है कि अहिंसा व माँस त्याग हर एक को बहुत ज़रूरी है, अस्तु इतने बड़े महत्व के विषय को थोड़े में लिखने और संस्कृत आदि में संभव है कि अनेक त्रुटियां रहगई हों उन्हों के लिये मैं अपने सहृदय पाठकों से क्षमा प्रार्थी हूं और आगामी के लिये प्रार्थना करता हूं कि जिन महाशयों को इस पुस्तक में शुद्धि व अशुद्धि मालूम हो उसे पत्र द्वारा सूचित करें जो आगामी संस्करण में शुद्ध करदी जावे अन्त में मैं पं० लक्ष्मीनारायणजी शास्त्री, पं० उमरावसिंहजी सा० सोनपत रईस १०८ मुनि माणिकविजय जी, और लाला जैनीलाल जी को हार्दिक धन्यवाद देता हूं कि इन्होंने इस पुस्तक के सम्पादन आदि में मुझे बहुत ही सहायता दी है।

नोट—इस पुस्तक का लाभ भारत वर्षीय दि० जैन अनाथाश्रम देहली को सादर समर्पित है।

# विषय सूची।

# जीव-रक्षा-दर्पण ।

## उपनाम—आईनय हमदर्दी

## भाग द्वितीय

हिन्दू और जैनशास्त्रों के प्रमाणपूर्वक हिंसा और बलि निषेध।

### १—अथर्ववेद ऋचा पहली

ये त्रिषप्ताः परियन्ति विश्वा रूपाणि बिभ्रतः ।
वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे ॥ १ ॥

॥ अन्वयः ॥

(ये) ये (त्रिषप्ताः) त्रिषु जलस्थलान्तरिक्षेषु सम्बद्धाः (विश्वा रूपाणि बिभ्रतः) अनेकविधशरीराणि धारयन्तो नाना जन्तवः (परियन्ति) सर्वत्र भ्रमन्ति (तेषाम्) जलस्थलान्तरिक्षचराणां विविधजीवानाम् [तन्वः] शरीराणि (बला) बलवान् श्रेष्ठ इति यावत् अथवा (बला) बलात्कारेणान्यायेनेति यावत् (वाचस्पतिः) वेदवाण्याः पालको विद्वान् (अद्य) न हिनस्तु किन्तु (मे) मां प्रीणायितुं (दधातु) पुष्णातु।

### भावार्थः

महाकारुणिको जगदीश्वरो जीवान् बोधयति-"सर्वैश्वर्यैककारणीभूतायै मत्प्रीतये विद्वद्भिस्सर्वजन्तवः सदा रक्षणीयाः न च तेषु केचन हिंसनीयाः" ॥ इति ॥

## पदनिष्पत्तिः—

( षप्त ) इति " षप् समवाये " ( धा० भ्वा० ) इत्यस्य धातोरूपमत्र पक्षे ज्ञेयम् ।

( विश्वा ) इति बहुनामसु परिगणितम् ( निघण्टौ० अ० ३ ॥ खं० १ ) ॥

( वाचस्पतिः ) वाचः पाता वा पालयिता वा ( निरु०दै० अ० ४ ) ॥

( बला ) इत्यत्र "सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः" ( अ० ७ । १ । ३९ ) इति सोरात्वम् ।

(तन्वः) इत्यत्र सम्बन्धसामान्येन व्यत्ययेन वा द्वितीयास्थाने षष्ठी—"तन्वादीनां छन्दसि बहुलमिति" शसि यण् वा ॥

[अद्य] इति दो अवखण्डने ( धा० दि० ) इत्यस्माल्लोटो मध्यमपुरुषैकवचने "द्य" इति सिद्धे पुनर्नञ्स्तिङन्तेन समासः पुरुषव्यत्ययश्च छान्दसः ॥ तत्र व्यत्ययविधायकं भाष्यं तु लिखितपूर्वमेवास्ति इदानीं छन्दसि कतिपयतिङन्तोत्तरपदसमासविधायकं च "सहसुपा" । [ अ० २ । १ ४ ] इति पाणिनीयसूत्रस्य भाष्यमुल्लिख्यते ॥

तस्यैतत्प्रयोजनं योगाङ्गं यथा विज्ञायेत सति च योगाङ्गे योगविभागः करिष्यते "सह" । सुप्समस्यते केन सह समर्थेन । अनुव्यचलद् । अनुप्राविशत् । ततः, "सुपा" सुपा च सह सुप् समस्यते अधिकारश्च लक्षणञ्च यस्य समासस्यान्यल्लक्षणं नास्ति इदं तस्य लक्षणं भविष्यति । पुनरुत्स्यूतं वासोदेयम् पुनर्निष्कृतो रथ इति ॥

( मे ) इत्यत्र "क्रियार्थोपपदस्य च कर्मणि स्थानिनः"
( अ० । २ । ३ । १४ ) इति चतुर्थी ।

## २–अथर्ववेद ३ ॥

य आमं मांसमदन्ति, पौरुषेयं च ये क्रविः ।
गर्भान्खादति केशवास्तानितो नाशयामसि ॥
१–७०–६

## ३–अथर्ववेद ४ ॥

यथा मांसं यथा सुरा यथाऽक्षा अधिदेवने ।
यथा पुंसो वृषण्यतः स्त्रियां निहन्यते मनः ॥

## ४–वेदधर्मोपदेशः ।

मा हिंस्यात्सर्वा भूतानि ।

## ५–यजुर्वेद ॥

असुर्या नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्यापि गच्छन्ति येके चात्महनो जनाः ॥
यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विचिकित्सति ॥

## ६—यजुर्वेद १८-३ ।

मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे ॥

## यजुर्वेद ब्राह्मण ॥

स यं पुरुषमालभन्त स किं पुरुषोऽभवद्यावश्वं च गां च तौ गौरश्वगवयश्चाभवतां यविमालभन्त । स उष्ट्रोऽभवद्यमजमालभन्त

स शरभोऽभवत्तस्मादेतेषां पशूनां नाशितव्यमपक्रांतमेघा हैते पशवः सर्वेषां वा एष पशूनां मेधौ यद्व्रीहियवौ ॥

## ७—यज्ञों के नामों के अर्थ।

## (शतपथ ब्राह्मण)

अश्वं वै राष्ट्रम् ॥
गौरन्नं गौर्वै पृथ्वी।
नरमेधः ( अतिथियज्ञ )
सातवार्षिकाः व्रीहयः अजाः प्रोच्यन्ते।

## ८—साक्षी व्याकरणानि ॥

(अश्वमेधः) न श्वः अश्वः अश्वे परमात्मनि मेधा यस्मिन् कर्मणि सः अश्वमेधः।

( गोमेधः ) गौरिन्द्रियं तासु मेधा यस्मिन् कर्मणि स गोमेधः।

( नरमेधः ) नरः मायासवलपरमात्मा तस्मिन्मेधा यस्मिन्कर्मणि स नरमेधः।

( अजमेधः ) न जायते इति अजः तस्मिन्मेधा यस्मिन्कर्मणि स अजमेधः।

## ९—वैशेषिकसूत्र ॥ ७ ॥

दुष्टं हिंसायाम्। तस्य समभिव्याहरतो दोषः।

## १०—योगसाधनपाद सूत्र ॥ ३० ॥

अहिंसासत्यास्त्येयब्रह्मचर्यापरिग्रहा यमाः।

## ११-पातञ्जलियोगदर्शन साधनपाद सूत्र ॥ ३५ ॥

अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥

## १२--व्यासभाष्य ॥

तत्राऽहिंसा सर्वदा सर्वथा सर्वभूतानामनभिद्रोहः ।

## १३--व्यासवाक्य ॥

प्राणिघातात्तु यो धर्ममीहते मूढ़मानसः ।
स वाञ्छति सुधावृष्टिं कृष्णाऽहिमुखकोटरात् ॥

## १४--व्यासवाक्य ॥

अष्टादशपुराणेषु व्यासस्य वचनद्वयम् ।
परोपकारः पुण्याय पापाय परपीडनम् ॥

## १५--वेदान्तशास्त्र ॥

अन्धे तमसि मज्जामः पशुभिर्ये यजामहे ।
हिंसा नाम भवेद्धर्मो न भूतो न भविष्यति ॥

## १६--दानधर्म ॥

इज्यायज्ञश्रुतिकृतैर्यो मार्गैरबुधो जनः ।
हन्याज्जंतून् मांसगृध्नी स वै नरकभाग्भवेत् ॥

## १७--बृहत्पाराशर संहिता अध्याय ५ ॥

यस्तु प्राणिवधं कृत्वा मांसेन तर्पयेत् पितृन् ।
सोऽविद्वान् चन्दनं दग्ध्वा कुर्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे तथा किञ्चित् बाल आदातुमिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत् तथा ॥

## १८--वशिष्ठवाक्यम् ॥

यावज्जीवं च यो मांसं विषवत्परिवर्जयेत् ।
वशिष्ठो भगवानाह प्राप्नुयात्स्वर्गसम्पदम् ॥

## १९--वशिष्ठवाक्य ॥

ये क्षान्तदान्ताः श्रुतिपूर्णकर्णा
जितेन्द्रियाः प्राणवधान्निवृत्ताः ।
प्रतिग्रहे संकुचिताग्रहस्ता-
स्ते ब्राह्मणास्तारयितुं समर्थाः ॥

## २०--अगस्तमुनिरुवाच ॥

सत्यं तीर्थं क्षमा तीर्थं, तीर्थमिन्द्रियनिग्रहः ।
सर्वभूतदया तीर्थं, सर्वमार्जवमेव च ॥
दानं तीर्थं दमस्तीर्थं, सन्तोषस्तीर्थमुच्यते ।
ब्रह्मचर्यं परं तीर्थं, तीर्थं च प्रियवादिता ॥
ज्ञानं तीर्थं धृतिस्तीर्थं, पुण्यं तीर्थमुदाहृतम् ।
तीर्थानामपि तत्तीर्थं, विशुद्धिर्मनसः परा ॥
एतत्ते कथितं देवि !, मानसं तीर्थलक्षणम् ।

## २१--चाणक्यनीति पूर्वार्द्ध अ० ८ श्लोक २२ ॥

मांसभक्षैः सुरापानैर्मूर्खैश्चाक्षरवर्जितैः ।
पशुभिः पुरुषाकारैर्भाराक्रान्तास्ति मेदिनी ॥

## २२--चाणक्यनीति ॥

त्यजेद्धर्मं दयाहीनम् ॥

## २३--वैद्यचूड़ामणि खण्ड ३. श्लोक १२१ ॥

अदनं हि मनुष्याणामन्नमेव प्रकीर्त्तितम् ।
मांसाद्रक्तप्रकोपो हि तस्मात्कुष्ठश्च जायते ॥
हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृते ।
सम्भिन्नालापव्यापादमभिध्याद्दग्विपर्य्ययम् ॥ २१ ॥

## २४--वाग्भट्ट सूत्रस्थान अ० २ श्लोक २१-२२ ॥

पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ।
अवृत्तिव्याधिशोकार्त्तानन्नुवर्तेत शक्तितः ॥

## २५--रघुवंश काव्य सर्ग २ ॥

क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलिम्लुचैर्वा ॥

## २६--श्लोक-भर्तृहरिः ॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यम् ,
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा,
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्था ॥

## २७--अत्रिस्मृतिः ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ॥
भावशुद्धिर्हरेर्भक्तिः संतोषः शौचमार्दवम् ॥ इत्यादि ॥

## २८--याज्ञवल्क्यस्मृतिः ॥

यथैवात्मा परैस्तद्वद् द्रष्टव्यः सुखमिच्छता ।

सुखदुःखानि तुल्यानि यथात्मनि तथा परे ॥
अनृतं परदारांश्च तथाऽभक्ष्यस्य भक्षणम् ।
अगम्यागमनाऽपेयपानं स्तेयं च हिंसनम् ॥
अश्रौतकर्माचरणं मैत्रधर्मबहिष्कृतम् ।
न चैतानि विकर्माणि तानि सर्वाणि वर्जयेत् ॥

## २९--याज्ञवल्क्यस्मृति आचाराध्याय ॥

अहिंसा सत्यमस्तेयं शौचमिंद्रियनिग्रहः ।
दानं दया दमः क्षान्तिः सर्वेषां धर्मसाधनम् ॥

## ३०--याज्ञवल्क्यस्मृतिः ।

सर्वान्कामानवाप्नोति हयमेधफलं तथा ।
गृहेऽपि निवसन्विप्रो मुनिर्मांसविवर्जनात् ॥

## ३१--याज्ञवल्क्यस्मृति अ० १ श्लोक ८ ।

इज्याचारदमोऽहिंसा—दानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥

## ३२—याज्ञवल्क्यसंहिता ।

कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ।
अक्लेशजननं प्रोक्तमहिंसात्वेन योगिभिः ॥

## ३३--मनुवाक्यम् ।

यद्ध्यायते यत्कुरुते रतिं बध्नाति यत्र च ।
तदवाप्नोत्ययत्नेन यो हिनस्ति न किंचन ॥

## ३४--मनुस्मृतिः ।

इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसत्वं च भूतानाममृतत्वाय कल्पते ॥

### ३५—मनुस्मृतिः ।

यो वन्धनवधक्लेशान्, प्राणिनां न चिकीर्षति ।
स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥

### ३६—मनुस्मृति, अ० ५, श्लोक ५३ ।

वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।
मांसानि च न खादेद् यस्तयोः पुण्यफलं समम् ॥

### ३७—मनुस्मृति अध्याय ५, श्लोक ५१ ।

अनुमन्ता विशसिता, निहन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपहर्ता च, खादकश्चेति घातकाः ॥

### ३८—यमस्मृतिः ।

अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ।
स्वदारनिरतो दांता स वै ब्राह्मण उच्यते ॥
सत्यं दानं सदा शीलमानृशंस्यं दया घृणा ।
दृश्यते यत्र लोकेस्मिंस्तं देवा ब्राह्मणं विदुः ॥

### ३९—यमकिंकरसंवादे यमवाक्यम् ।

न चलति निजवर्णधर्मतो यः,
सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किंचिदुच्चैः,
स्थिरमनसं तमवेहि विष्णुभक्तम् ॥
विमलमतिरमत्सरः प्रशान्तः,
शुचिचरितोऽखिलसत्त्वमित्रभूतः ।
प्रियहितवचनोऽस्तमानमायो,
वसति सदा हृदि तस्य वासुदेवः ॥

## ४०--पाराशरयमस्मृतिः ।

विक्रयं मद्यमांसानामभक्ष्यस्य च भक्षणम् ।
अगम्यागामिता चौर्यं शूद्रैः स्युः पातहेतवः ॥
प्राणदानं च यो दद्यात्सर्वेषामपि देहिनाम् ।
स याति परमं स्थानं यत्र देवश्चतुर्भुजः ॥

## ४१—श्रीमद्भागवत ।

भो भो प्रजापते राजन् ! पशून्पश्य त्वयाध्वरे ।
संज्ञापितान् जीवसंघान्निर्घृणेन सहस्रशः ॥
एते त्वां संप्रतीक्षंते स्मरन्तो वैशसं तव ।
संपरेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः ॥
द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति ।
एष मा करुणो हन्यादतज्ज्ञो ह्यसुतृप्ध्रुवम् ॥

## ४२--श्रीमद्भागवते ।

तस्मान्न कस्यचिद्द्रोहमाचरेत्स तथाविधः ।
आत्मनः क्षेममन्विच्छन् द्रोग्धुर्वै परतो भयम् ॥

## ४३—पुराणवचनानि श्रीमद्भागवते ।

हिंसाविहारा ह्यालुब्धाः पशुभिः स्वसुखेच्छया ।
यजन्ते देवतायज्ञैः पितृभूतपतीन् खलाः ॥

## ४४—श्रीमद्भागवते ।

द्विषंतः परकायेषु स्वात्मानं हरिमीश्वरम् ।
मृतके सानुबन्धेस्मिन् बद्धस्नेहाः पतन्त्यधः ॥

### ४५--भागवत ३ स्कंध, ७ अध्याय ।

सर्वे वेदाश्च यज्ञाश्च तपोदानानि चानघ ।
जीवाभयप्रदानस्य न कुर्वीरन् कलामपि ॥

### ४६--भागवत ११ स्कंध, ५ अध्याय ।

ये त्वनेवंविदोऽसन्तः स्तब्धाः सदभिमानिनः ।
पशून्द्रुह्यन्ति विस्रब्धाः प्रेत्य खादन्ति ते च तान् ॥

### ४७--गीता अध्याय १६ ।

अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥
अहिंसा सत्यमक्रोधस्त्यागः शांतिरपैशुनम् ।
दयाभूतेष्वलोल्यत्वं मार्दवं ह्रीरचापलम् ॥२॥
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥३॥

### ४८--गीता अध्याय ६ ।

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥

### ४९--गीता अध्याय १६, श्लोक १९-२० ।

संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभा-
नासुरीष्वेव योनिषु । मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिम् ॥

## ५०—गीता अध्याय १७, श्लोक १९।

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥

## ५१—भगवद्‌गीता अ० १२, श्लो० १३ ।

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥

## ५२-महाभारत ।

तपः कृते प्रशंसंति त्रेतायां ज्ञानसाधनम् ।
द्वापरे यज्ञमेवाहुर्दानमेकं कलौ युगे ॥१॥
सर्वेषामेव दानानामिदमेवैकमुत्तमम् ।
अभयं सर्वभूतानां मनोवाक्कायकर्मभिः ॥२॥
चराणामचराणां च योऽभयं वै प्रयच्छति ।
स सर्वभयनिर्मुक्तः परं ब्रह्माधिगच्छति ॥३॥
नास्त्यहिंसापरं पुण्यं नास्त्यहिंसापरं सुखम् ।
नास्त्यहिंसापरं ज्ञानं नास्त्यहिंसापरोऽभयः ॥४॥

## ५३-महाभारत ।

अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः ।
संशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिताः ॥१॥

## ५४--महाभारत ।

लोके यः सर्वभूतेभ्यो ददात्यभयदक्षिणाम् ।
स सर्वेभ्योऽपि जीवेभ्यः प्राप्नोत्यभयदक्षिणाम् ॥१॥

न भूतानामहिंसाया ज्यायान्धर्मोऽस्ति कश्चन ।
यस्मान्नोद्विजते भूतं जातु किंचित्कश्चन ॥ २ ॥
सोऽभयं सर्वभूतेभ्यः संप्राप्नोति महामुने ।
यस्मादुद्विजते लोको रूपाद्विश्मगतादिव ॥ ३ ॥
न स धर्ममवाप्नोति इह लोके परत्र च ।
अकारणो हि नैवास्ति धर्मः सूक्ष्मो हि जाजले ॥४॥

## ५५--महाभारत शांतिपर्व मोक्षधर्म ।

जीवानां रक्षणं श्रेष्ठं जीवा जीवितकांक्षिणः ।
तस्मात्सर्वप्रदानेभ्योऽभयदानं विशिष्यते ॥

## ५६--महाभारत शान्तिपर्व ।

सप्तद्वीपां सरत्नां च दद्यान्मेरुं सकांचनम् ।
यस्य जीवदया नास्ति सर्वमेतन्निरर्थकम् ॥ १ ॥
स्वल्पायुर्विकलो रोगी विचक्षुर्बधिरः खलु ।
वामनः पामनः षंढो जायते स भवे भवे ॥ २ ॥

## ५७--महाभारत शान्तिपर्व मोक्ष अधिकार अ० २७३ ।

तस्य तेनानुभावेन मृगहिंसाऽऽत्मनस्तदा ।
तपो महत्समुच्छिन्नं तस्माद्‌ हिंसा न यज्ञिया ॥
अहिंसा सकलो धर्मोऽहिंसाधर्मस्तथा हितः ।
सत्यं तेऽहं प्रवक्ष्यामि नो धर्मः सत्यवादिनाम् ॥

## ५८—महाभारत शान्तिपर्व ।

सत्येनासाद्यते धर्मः दया दानेन वर्द्धते ।
क्षमया स्थाप्यते धर्मः क्रोधलोभाद्विनश्यति ॥ १ ॥
अहिंसा सत्यमस्तेयं त्यागो मैथुनवर्जनम् ।
पंचस्वेतेषु धर्मेषु सर्वे धर्माः प्रतिष्ठिताः ॥ २ ॥
अहिंसालक्षणो धर्मः, अधर्मो प्राणिनां वधः ।
तस्माद्धर्मार्थिभिर्लोके कर्तव्या प्राणिनां दया ॥३॥
लोभमायाभिभूतानां नराणां प्राणिनां घ्नताम् ।
एषां प्राणिवधो धर्मो विपरीता भवन्ति ते ॥ ४ ॥
न शोणितकृतं वस्त्रं शोणितेनैव शुध्यते ।
शोणितार्द्रं तु यद्वस्त्रं शुद्धं भवति वारिणा ॥ ५ ॥
यदि प्राणिवधो धर्मो स्वर्गश्च खलु जायते ।
संसारभाजकानां तु कुतः श्वभ्रो विधास्यते ॥ ६ ॥
ध्रुवं प्राणिवधो यज्ञे नास्ति यज्ञस्त्वहिंसकः ।
ततोऽहिंसात्मकः कार्यः सदा यज्ञो युधिष्ठिरः ॥ ७ ॥
इन्द्रियाणि पशून् कृत्वा वेदीं कृत्वा तपोमयीम् ।
अहिंसामाहुतिं कृत्वा आत्मयज्ञं यजाम्यहम् ॥ ८ ॥
ध्यानाग्नौ जीवकुंडस्थे दममारुतदीपिते ।
असत्कर्मसमित्क्षेपे अग्निहोत्रं कुरूत्तमम् ॥ ९ ॥
यूपं छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गे नरकं केन गम्यते ॥ १० ॥
मातृवत् परदाराणि परद्रव्याणि लोष्ठवत् ।
आत्मवत् सर्वभूतानि यः पश्यति स पश्यति ॥११॥
अहिंसा सर्वजीवेषु तत्वज्ञैः परिभाषितम् ।
इदं हि मूल धर्मस्य शेषस्तस्यैव विस्तरः ॥ १२ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं सुसंयमः ।
मद्यमांसादित्यागश्च तद्वै धर्मस्य लक्षणम् ॥१३॥
यथा मम प्रियाः प्राणास्तथान्यस्यापि देहिनः ।
इति मत्वा न कर्तव्यो घोरः प्राणिवधो बुधैः ॥१४॥
प्राणिनां रक्षणं युक्तं मृत्युभीता हि जन्तवः ।
आत्मौपम्येन जानद्भिरिष्टं सर्वस्य जीवितम् ॥ १५ ॥
उद्यतं शस्त्रमालोक्य विषादं यांति विह्वलाः ।
जीवाः कंपन्ति संत्रस्ता नास्ति मृत्युसमं भयम् ॥१६॥
कण्टकेनापि विद्धस्य महती वेदना भवेत् ।
चक्रकुंतासियष्ट्याद्यैः मार्यमाणस्य किं पुनः ॥१७॥
दीयते मार्यमाणस्य कोटिजीवितमेव च ।
धनकोटिं परित्यज्य जीवो जीवितुमिच्छति ॥१८॥
यो यत्र जायते जन्तुः स तत्र रमते चिरम् ।
अतः सर्वेषु जीवेषु दयां कुर्वन्ति साधवः ॥ १९ ॥
अमेध्यमध्ये कीटस्य सुरेंद्रस्य सुरालये ।
समाना जीविताकांक्षा तुल्यं मृत्युभयं द्वयोः ॥ २० ॥
अहिंसा सर्वजीवानामाजन्मापि हि रोचते ।
निश्चयमात्मनो विषये तथा कार्याऽपरेष्वपि ॥ २१ ॥
जीवानां रक्षणं श्रेष्ठं जीवा जीवितकांक्षिणः ।
तस्मात्समस्तदानेभ्योऽभयदानं प्रशस्यते ॥ २२ ॥
अहिंसा प्रथमं पुण्यं पुण्यमिंद्रियनिग्रहः ।
सर्वभूतदया पुण्यं क्षमा पुण्यं विशेषतः ॥ २३ ॥
ध्यानं पुण्यं तपः पुण्यं ज्ञानं पुण्यं सुसत्तमम् ।
सत्यमेवाष्टमं पुण्यं तेन तुष्यन्ति देवताः ॥ २४ ॥
पृथिव्यामप्यहं पार्थ ! वायावग्नौ जलेऽप्यहम् ।

वनस्पतिगतश्चाहं सर्वभूते वसाम्यहम् ॥ २५ ॥
जले विष्णुः स्थले विष्णुर्विष्णुः पर्वतमस्तके ।
ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ॥ २६ ॥
यो मां सर्वगतं ज्ञात्वा न च हिंसेत् कदाचन ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ २७ ॥

## ५९—महाभारत शान्तिपर्व उत्तरार्द्ध
## मोक्षधर्म अध्याय ९२ ।

सुरा मत्स्याः पशोर्मांसं द्विजादीनां बलिस्तथा ।
धूर्तैः प्रवर्त्तितं ह्येयं तत्र वेदेषु कथ्यते ॥

## ६०—महाभारत अश्वमेधकपर्व अध्याय १९१ ।

अपरिज्ञानमेतत्ते महान्तं धर्ममिच्छतः ।
न हि यज्ञे पशुगणा विधिद्रष्टा पुरन्दर ॥ १३ ॥
धर्मोपघातकस्त्वेष समारम्भस्तव प्रभो ।
नायं धर्मकृतो यज्ञो न हिंसा धर्म उच्यते ॥ १४ ॥

## ६१—महाभारत ।

गर्भवासेषु पच्यन्ते क्षाराम्लकटुकैरसैः ।
मूत्रस्वेदपुरीषाणां परुषैर्भृशदारुणैः ॥ २९ ॥
जाताश्चाप्यवशास्तत्र छिद्यमानाः पुनः पुनः ।
पाच्यमानाश्च दृश्यन्ते विवशा मांसगृद्धिनः ॥ ३० ॥
कुम्भीपाके च पच्यन्ते तां तां योनिमुपागताः ।
आक्रम्य मार्यमाणाश्च भ्राम्यन्ते वै पुनः पुनः ॥ ३१ ॥

## ५८—महाभारत ।

आत्मौपम्येन मन्तव्यं बुद्धिमद्भिः कृतात्मभिः ।
मृत्युतो भयमस्तीति विदुषां भूतिमिच्छताम् ॥
किं पुनर्हन्यमानानां तरसा जीवितार्थिनाम् ।
अरोगाणामपापानां पापैर्मांसोपजीविभिः ॥
तस्माद्विद्धि महाराज ! मांसस्य परिवर्जनम् ।
धर्मस्यायतनं श्रेष्ठं स्वर्गस्य च सुखस्य च ॥
न हि मांसं तृणात्काष्ठादुपलाद्वापि जायते ।
हत्वा जन्तुं ततो मांसं तस्माद्दोषस्तु भक्षणे ॥
नात्मनोऽस्ति प्रियतरः पृथिवीमनुसृत्य ह ।
तस्मात्प्राणिषु सर्वेषु दयावानात्मवद्भवेत् ॥
हिंसाप्रवर्तकं मांसमधर्मस्य च वर्द्धकम् ।
दुःखस्योत्पादकं मांसं तस्मान्मांसं न भक्षयेत् ॥१॥
अहिंसासम्भवो धर्मः स हिंसातः कथं भवेत् ।
न तीर्थजानि पद्मानि जायन्ते जातवेदसः ॥
क मांसं कास्ति वै भक्तिः क मद्यं क शिवार्चनम् ।
मद्यमांसानुरक्तानां दूरे तिष्ठति शङ्करः ॥
किं जाप्यहोमनियमैस्तीर्थस्नानैः-शुभाशुभम् ।
यदि खादन्ति मांसानि सर्वमेतन्निरर्थकम् ॥
तिलसर्षपमात्राणि यो मांसं भक्षते नरः ।
स याति नरके घोरे यावच्चन्द्रदिवाकरौ ॥
केदारे यो जलं पीत्वा पुण्यमर्जयते नरः ।
तस्माद्दशगुणं प्रोक्तं मद्यामिषविवर्जनम् ॥
न हि प्राणात् प्रियतरं लोके किञ्चन विद्यते ।

तस्माद्द दयां नरः कुर्याद्द यथाऽऽत्मनि तथा परे ॥१२॥
शुक्राच्च तात ! संभूतिर्मांसस्येह न संशयः ।
भक्षणे तु महान् दोषो निवृत्या पुण्यमुच्यते ॥ १३
यत् सर्वेष्विह भूतेषु दया कौरवनन्दन ।
न भयं विद्यते जातु नरस्येह दयावतः ॥ २० ॥
दयावतामिमे लोकाः परे चाऽपि तपस्विनाम् ।
अहिंसालक्षणोधर्म इति धर्मविदो विदुः ॥ २१ ॥
अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
अभयं तस्य भूतानि ददतीत्यनुशुश्रुमः ॥२३॥
क्षतं च स्खलितं चैव पतितं क्रुष्टमाहतम् ।
सर्वभूतानि रक्षन्ति समेषु विषमेषु च ॥ २४ ॥
नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः ।
मुच्यते भयकालेषु मोक्षयेद्यो भये परान् ॥ २५ ॥
प्राणदानात्परं दानं न भूतं न भविष्यति ।
नह्यात्मनः प्रियतरं किंचिदस्तीह निश्चितम् ॥ २६ ॥
अनिष्टं सर्वभूतानां मरणं नाम भारत ! ।
मृत्युकाले हि भूतानां सद्यो जायेत वेपथुः ॥ २७ ॥
जातिजन्मजरादुःखे नित्यं संसारसागरे ।
जन्तवः परिवर्तन्ते मरणादुद्विजन्ति च ॥ २८ ॥
नात्मनोऽस्ति प्रियतरः पृथिवीमनुसृत्य ह ।
तस्मात्प्राणिषु सर्वेषु दयावानात्मवान् भवेत् ॥ ३२ ॥
सर्वमांसानि यो राजन् ! यावज्जीवं न भक्षयेत् ।
स्वर्गे स विपुलं स्थानं प्राप्नुयान्नात्र संशयः ॥ ३३ ॥
ये भक्षयन्ति मांसानि भूतानां जीवितैषिणाम् ॥
भक्ष्यन्ते तेऽपि भूतैस्तैरिति मे नास्ति संशयः ॥ ३४ ॥

## ५६—॥ महाभारत ॥

महतामपि दानानां कालेन हीयते फलम् ।
भीताभयप्रदानस्य क्षय एव न विद्यते ॥ १ ॥
कपिलानां सहस्राणि यो विप्रेभ्यः प्रयच्छति ।
एकस्य जीवितं दद्याद्, न च तुल्यं युधिष्ठिर ! ॥ २ ॥
दत्तमिष्टं तपस्तप्तं तीर्थसेवा तथा श्रुतम् ।
सर्वेऽप्यभयदानस्य कलां नार्हन्ति षोडशीम् ॥ ३ ॥
नातो भूयस्तपो धर्मः कश्चिदन्योऽस्ति भूतले ।
प्राणिनां भयभीतानामभयँयत् प्रदीयते ॥ ४ ॥
वरमेकस्य सत्वस्य दत्ता ह्यभयदक्षिणा ।
न तु विप्रसहस्रेभ्यो गोसहस्रमलंकृतम् ॥ ५ ॥
हेमधेनुधरादीनां दातारः सुलभा भुवि ।
दुर्लभः पुरुषो लोके यः प्राणिष्वभयप्रदः ॥ ६ ॥
यथा मे न प्रियो मृत्युः सर्वेषां प्राणिनां तथा ।
तस्मान्मृत्युभयान्नित्य त्रातव्याः प्राणिनो बुधैः ॥ ७ ॥
एकतः क्रतवः सर्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ ८ ॥
एकतः कांचनो मेरुर्बहुरत्ना वसुन्धरा ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ ९ ॥

## ६०–महाभारत अनुशासन पर्व अध्याय ११५

नाभागेनाम्बरीषेण गयेन च महात्मना ॥
आयुनाथानरण्येन दिलीपरघुपूरुभिः ॥ ६८ ॥
कार्त्तवीर्यानिरुद्धाभ्यां नहुषेण ययातिना ॥
नृगेण विश्वगाश्वेन तथैव शशबिन्दुना ॥ ६९ ॥

युवनाश्वेन च तथा शिबिनौशीनरेण च ॥
मुचुकुंदेन मान्धात्रा हरिश्चंद्रेण वा विभो ! ॥ ७० ॥
श्येनाचैत्रेण राजेंद्र ! सोमकेन वृकेण च ।
रैवते रंतिदेवेन वसुना संजयेन च ॥ ७१ ॥
एतैश्चान्यैश्च राजेन्द्र ! कृपेण भरतेन च ॥
दुष्यंतेन करूषेण रामालर्कनरैस्तथा ॥ ७२ ॥
विरूपाश्वेन नामिना जनकेन च धीमता ॥
ऐलेन पृथुना चैव वीरसेनेन चैव हि ॥ ७३ ॥
इक्ष्वाकुणा शंभुना च श्वेतेन सगरेण च ॥
अजेन धुंधुना चैव तथैव च सुबाहुना ॥ ७४ ॥
हर्यश्वेन च राजेंद्र ! क्षुपेन भरतेन च ॥
एतैश्चान्यैश्च राजेन्द्र ! पुरा मांसं न भक्षितम् ॥ ७५ ॥
शारदं कौमुदं मांसं ततस्ते स्वर्गमाप्नुवन् ॥
ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियान्विताः ॥ ७६ ॥
तदेतदुत्तमं धर्ममहिंसाधर्मलक्षणम् ॥
ये चरन्ति महात्मानो नाकपृष्ठे वसंति ते ॥ ७७ ॥
मधु मांसं च ये नित्यं वर्जयंति हि धार्मिकाः ॥
जन्मप्रभृति मद्यं च ते सर्वे मुनयः स्मृताः ॥ ७८ ॥

## ६१-महाभारत अनुशासन पर्व ॥ १३॥अध्याय १६

अहिंसापरमो धर्मस्तथाऽहिंसा परो दमः ।
अहिंसा परमं दानमहिंसा परमंतपः ॥
अहिंसा परमो यज्ञस्तथाऽहिंसा पर फलम् ।
अहिंसा परमं मित्रमहिंसा परमं सुखम् ॥
सर्वयज्ञेषु वा दानं सर्वतीर्थेषु वा स्नुतम् ॥

सर्वदानफलं वापि नैवतुल्यमहिंसया ॥ ३ ॥
अहिंस्रस्य तपोऽक्षय्यमहिंस्रो यजते सदा ॥
अहिंस्रः सर्वभूतानां यथा माता यथा पिता ॥ ४ ॥
एतत् फलमहिंसाया भूयश्च कुरुपुङ्गव ! ।
न हि शक्या गुणान्वक्तुमपि वर्षशतैरपि ॥ ५ ॥
अहिंसालक्षणो धर्म इति धर्मविदो विदुः ॥
यदहिंसात्मकं कर्म तत्कुर्यादात्मवान्नरः ॥ ६ ॥
अभयं सर्वभूतेषु यो ददाति दयापरः ॥
अभय तस्य भूतानि ददतीत्यनुशुश्रुमः ॥ ७ ॥
आयुष्मान् सुभगः श्रीमान् सुरूपः कीर्तिमान्नरः ।।
अहिंसाव्रतमाहात्म्यादेकस्मादेव जायते ॥ २ ॥

६२--महाभारत अनुशासन पर्व अध्याय ६

श्लोक ११४

वने मूलफलाशी च तप्यन् सुविपुलं तपः ॥
पुण्यायतनचारी च भूतानामविहिंसकः ॥ २४१ । ७ ॥
न भक्षयति मांसं यो त्रिविधं स विमुच्यते ॥

६३--महाभारत, श्लोक १६२ अध्याय ॥२३॥

अहिंसा संयमः क्रोधो दानमेतच्चतुष्टयम् ।
अजातशत्रो ! सेवस्व धर्म एष सनातनः ॥

६४--महाभारत, शांतिपर्व, श्लोक ६३ अध्याय ६

हिंसात्मके, देयान्यदेयानि भवन्ति चास्मै ॥

### ६५--महाभारत अनु० ११४-२ ॥

ऋषयो ब्राह्मणा देवाः प्रशंसन्ति महामते ! ।
अहिंसालक्षणं धर्म्मं वेदप्रामाण्यदर्शनात् ॥

### ६६--महाभारत अनु० अध्याय १४४ श्लोक ५६-५७

न घातयति नो हन्ति घ्नंतं नैवानुमोदते ॥
सर्वभूतेषु सस्नेहो यथात्मनि तथा परे ॥
ईदृशः पुरुषोत्कर्षो देवि ! देवत्वमश्नुते ॥

### ६७--महाभारत

यदि चेत्खादको न स्यान्न तदा घातको भवेत् ।
घातकः खादकार्थाय तद्घातयति वै नरः ॥
अभक्ष्यमेतदिति वै इति हिंसा निवर्तते ।
खादकार्थमतो हिंसा मृगादीनां प्रवर्तते ॥
यस्माद्ग्रसति व वायु हिंसकानां महाद्युते ! ॥
तस्माद्विवर्जयेन्मांसं य इच्छेद्धितिमात्मनः ॥
इदं तु खलु कौंतेय ! श्रुतमासीत् पुरा मया ॥
मार्कंडेयस्य वदतो ये दोषा मांसभक्षणे ॥
यो हि खादति मांसानि प्राणिनां जीवितैषिणाम् ॥
हतानां वा मृतानां वा यथा हंता तथैव सः ॥
घातको वधबंधाभ्यामित्येष त्रिविधो वधः ॥

### ६८--विष्णुपुराण

यावंति पशुरोमाणि पशुगात्रेषु भारत ! ।
तावद्वर्षसहस्राणि पच्यते पशुघातकाः ॥ १ ॥

आकाशगामिनो विप्राः पतिता मांसभक्षणात् ।
विप्राणां पतनं दृष्ट्वा तस्मान्मांसं न भक्षयेत् ॥ २ ॥
शुक्रशोणितसंभूतं यो मांस खादते नरः ।
जलेन कुरुते शौचं हसंते तत्र देवताः ॥ ३ ॥
किं जापहोमनियमैस्तीर्थस्नानैश्च भारत ! ॥
यदि खादन्ति मांसानि सर्वमेव निरर्थकम् ॥ ४ ॥
प्रभासं पुष्करं गंगा कुरुक्षेत्रं सरस्वती ॥
देविका चन्द्रभागा च सिंधुश्चैव महानदी ॥ ५ ॥
एतैस्तीर्थैर्महापुण्यं यः कुर्यादभिषेचनम् ।
अभक्षणं च मांसस्य न च तुल्यं युधिष्ठिर ! ॥ ६ ॥
किं वेषलिंगग्रहणैः किं शिरोमुण्डनैरपि ।
यदि खादन्ति मांसानि सर्वमेतन्निरर्थकम् ॥ ७ ॥
अल्पायुषो दरिद्राश्च परकर्मोपजीविनः ।
दुष्कुलेषु प्रजायंते ये नरा मांसभक्षकाः ॥ ८ ॥
अस्थिनि वसति रुद्रस्तथा मांसे जनार्दनः ।
शुक्रे वसति ब्रह्मा तस्मान्मासं न भक्षयेत् ॥ ९ ॥

## ६९--मार्कण्डेय-पुराण

सत्यं शौचमहिंसा च अनसूया तथा क्षमा ।
आनृशंस्यमकार्पण्य सन्तोषश्चाष्टमो गुणः ॥
अष्टावात्मगुणा ये हि तेषामादौ दया द्विज ॥
असूर्या नाम ते लोका यान्गच्छन्त्यात्मघातकाः ॥

## विष्णु-पुराण

न ताडयति नो हन्ति प्राणिनोऽन्यांश्च देहिनः ।
यो मनुष्यो मनुष्येन्द्र ! तोष्यते तेन केशवः ॥

स्वर्गार्थं यदि वाञ्छा वो निर्वाणार्थमथासुराः ।
तदलं पशुघातादि दुष्टं धर्मं निबोधत ॥
नैतद्युक्तिसह वाक्यं हिंसा धर्माय नेष्यते ।
हवींष्यनलदग्धानि फलायेत्यर्भकोदितम् ॥
निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते ।
स्वपिता यजमानेन किन्नु तस्मान्निहन्यते ? ॥

## ७१--मत्स्यपुराण

अधर्मो बलवानेष हिंसाधर्मेप्सया तव ।
नवः पशुविधिस्त्विष्टस्तव यज्ञे सुरोत्तम ! ॥
अधर्मो धर्मघाताय प्रारब्धः पशुभिस्त्वया ।
नायं धर्मो ह्यधर्मोऽयं न हिंसा धर्म उच्यते ॥

## ७२--देवीपुराण

ऋतुस्ते भविता पूर्णो रोगनाशश्च सर्वथा ।
दयासमं नास्ति पुण्यं पापं हिंसासमं नहि ॥
रागिणां रोचनार्थाय नोदत्तेयं विचारय ।
आत्मदेहस्य रक्षार्थं परदेहनिकृन्तनम् ॥
सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जगत्पतिः ।
आत्मवत्सर्वभूतेषु चिन्तनीयं नृपोत्तम ! ॥
जीवितव्यं प्रियं नूनं सर्वेषां सर्वदा किल ।
त्वमिच्छसि सुखं कर्तुं देहे हत्वा त्वमुद्विजम् ॥
कथं नेच्छेदसौ देहं रक्षितुं स्वसुखास्पदम् ।
पूर्वजन्मकृतं वैरं नानेन सह ते नृप ! ॥

## ७३--सौर-पुराण

एकतः क्रतवः सर्वे सर्वस्ववरदक्षिणाः ।
एकतोभयभीतस्य प्राणिनः प्राणरक्षणम् ॥३॥
अतोऽर्थं सर्वकालेषु दद्यादभयदक्षिणाम् ।
श्राद्धकाले विशेषेण स हि धर्मः परो मतः ॥४॥
यथाह्यभयदानेन तुष्यन्ति प्रपितामहाः ।
न तथा वस्त्रपानान्नरत्नालंकारकांचनैः ॥५॥

## ७४--सौर-पुराण

जन्ममृत्युभयाभावादभयं मोक्ष उच्यते ।
मोक्षमेव नरो याति प्राणिनामभयप्रदः ॥

## ७५--ब्रह्मवैवर्तपुराण

जीवितस्य प्रदानाद्धि नान्यद्दानं विशिष्यते ।
तस्मात्सर्वप्रयत्नेन देयं प्राणाभिरक्षणम् ॥
अहिंसा सर्वदैवत्यं पवित्रं सर्वपावनम् ॥

## ७६-ब्रह्म-पुराण

अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ ।
यमाः सक्षेपतः प्रोक्ता नियमाञ्छृणु पुत्रक ! ॥

## ७७—वाराहपुराण अ० १२५

हिंसादीनि न कुर्वन्ति मधुमांसविवर्जकाः ।
मनसा ब्राह्मणीं चैव योगक्षेमकदाचन ॥

## वाराहपुराण अ० ११२

विकर्म नाभिकुर्वीत कौमारव्रतसंस्थितः ।
सर्वभूतदयायुक्तः सत्वेन च समन्वितः ॥ ५ ॥

अध्याय १२२ पृष्ठ ५३१

## ७८—वाराहपुराण अध्याय १२७

परीवादं न कुर्वीत न हिंसां वा कदाचन ।
पैशुन्यं न च कर्तव्य स्तैन्यं वापि कदाचन ॥

## ७९—वाराह पुराण अ० १३२

जरायुजाण्डजोद्भिज्जस्वेदजानि कदाचन ।
ये न हिंसन्ति भूतानि शुद्धात्मानो दयापराः ॥

## ८०—हितोपदेश

स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते ।
अस्य दग्धोदरस्यार्थे कः कुर्यात् पातकं नरः ॥

## ८१—हितोपदेश

वैरिणोऽपि हि मुच्यन्ते प्राणान्ते तृणभक्षणात् ।
तृणाहाराः सदैवैते हन्यन्ते पशवः कथम् ? ॥

## ८२—हितोपदेश

योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् ।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ॥

## ८३--हितोपदेश

सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥

## पंचतन्त्र

यतः परस्परं विवदमानानामपि धर्मशास्त्राणां
"अहिंसा परमोधर्मः" इत्यैकमत्यम् ॥

## पंचतन्त्र

न गोप्रदान न महीप्रदानं नाऽन्नप्रदानं हि तथा प्रधानम् ।
यथा वदन्तीह बुधाः प्रधानं सर्वप्रदानेष्वभयप्रदानम् २९८
"दुःखोत्पत्तिर्मनःक्लेशस्तत्पर्यायस्य च क्षयः ।
यस्यां स्यात् सा प्रयत्नेन हिंसा हेया विपश्चिता" ॥१॥
"ये चक्रुः क्रूरकर्माणः शास्त्र हिंसोपदेशकम् ।
क ते यास्यन्ति नरके नास्तिकेभ्योऽपि नास्तिकाः?"॥३७॥
प्राणिनः सुखमीहन्ते विना धर्मं कुतः सुखम् ।
दयां विना कुतोधर्मः तस्मात् तत्र रतो भव ॥
कृपानदीमहातीरे सर्वे धर्मास्तृणांकुराः ।
तस्यां शोषमुपेतायां कियन्नन्दन्ति ते चिरम् ॥
न तच्छास्त्रं तु यच्छास्त्र वक्ति हिंसामनर्थदाम् ।
यतो भवति संसारः सर्वानर्थपरंपरः ॥
धर्मश्चेत्परदारसंगकरणाद्द धर्मः सुरासेवनात्,
संपुष्टिः पशुमत्स्यमांसनिकराहाराच्च हे वीर ! ते ॥
हत्या प्राणिचयस्य चेत् तव भवेत् स्वर्गापवर्गाप्तये ।
कोऽसत्कर्मतया तदा परिचितः स्यान्नेति जानीमहे ॥

यत्र प्राणिवधो धर्मः, अधर्मस्तत्र कीदृशः ? ।
ब्राह्मणो यत्र मांसाशी चाण्डालस्तत्रकीदृशः ? ॥
मातेव सर्वभूतानामहिंसा हितकारिणी ।
अहिंसैव हि संसारममरामृतसारिणी ॥ ४ ॥
अहिंसादुःखदावाग्निप्रावर्षेणघनावलिः ।
भवभ्रमरुगार्तानामहिंसा परमौषधिः ॥ ५ ॥
दीर्घमायु परं रूपमारोग्यं श्लाघनीयता ।
अहिंसायाः फलं सर्वं किमन्यत् ? कामदैव सा ॥ ६ ॥

## ८६--जैनशास्त्र

हेमाद्रिः पर्वतानां हरिरमृतभुजां चक्रवर्ती नराणां,
शीतांशुर्ज्योतिषां स्वस्तरुरवनिरुहां चंडरोचिर्ग्रहाणाम् ।
सिन्धुस्तोयाशयानां जिनपतिरसुरामर्त्यमर्त्याधिपानां,
यद्वत्तद्वद्व्रतानामधिपतिपदवीं यात्यहिंसा किमन्यत् ॥ १ ॥
जीवहिंसा भवेद्यत्र सुरापानं च यत्र वा ।
व्यभिचारो भवेद्यत्र त्याज्यो धर्मः स दूरतः ॥ ९ ॥
धर्माभासो ह्यधर्मोऽसौ तत्त्यागे नास्ति पातकम् ।
त्यागोऽस्य परमोधर्मः सच्छास्त्रप्रमितोऽनघ ! ॥ १० ॥
हिंसा विघ्नाय जायेत विघ्नशांत्यै कृतापि हि ।
कुलाचारधियाप्येषा कृता कुलविनाशिनी ॥ १ ॥
देवोपहारव्याजेन यज्ञव्याजेन येऽथवा ।
घ्नन्ति जन्तून गतघृणा घोरां ते यान्ति दुर्गतिम् ॥ २ ॥

## ८७—जैन-शास्त्र

क्रीडाभूः सुकृतस्य दुष्कृतरजःसंहारवात्याभवो-
दन्वन्नौव्यसनाग्निमेघपटलीसंकेतदूती श्रियाम् ॥

निःश्रेणिस्त्रिदिवौकसः प्रियसखी मुक्तेः कुगत्यर्गला,
सत्वेषु क्रियतां कृपैव भवतु क्लेशैरशेषैः परैः ॥१॥

## ८८—जैन-शास्त्र

सकमलवनमग्नेर्वासरं भास्वदस्ता-
दमृतमुरगवक्त्रात् साधुवादं विवादात्।
रुगपगममजीर्णाज्जीवितं कालकूटा-
दभिलषति वधाद्व यः प्राणिनां धर्ममिच्छेत् ॥

## ८९—जैन-शास्त्र

यदि ग्रावा तोये तरति तरणिर्यद्युदयते।
प्रतीच्यां सप्तार्चिर्यदि भजति शैत्यं कथमपि ॥
यदि क्ष्मापीठं स्यादुपरि सकलस्यापि जगतः।
प्रसूते सत्वानां तदपि न वधः क्वापि सुकृतम् ॥

## ९०—जैन-सूत्र अ० ७ सूत्र

हिंसाऽनृतस्तेयाब्रह्मचर्यपरिग्रहेभ्यो विरतिर्व्रतम् ॥

## ९१-धर्मसंग्रह श्रावकाचार अधिकार ५ श्लो०३३

बीभत्सु प्राणिघातोत्थं कृमिमूत्रमलाविलम्।
स्पष्टुं द्रष्टुं सतां नाह तन्मांसं भक्ष्यते कथम् ॥
पाषाणाज्जायते नैव न काष्ठान्न मृदादितः।
पशुघातोद्भवं सद्भिस्तन्मांसं कथमश्यते ? ॥
यस्याऽहं मांसमद्म्यत्र प्रेत्य मां स समत्स्यति।
एतां मांसस्य निरुक्तिमाहुः सूरिमतल्लिकाः ॥
फलसस्यादिवद्भक्ष्यं मांसं नो दोषवद्वदेत्।

कश्चिदेवं तमाहार्यो नेत्यं भेदं निशाभयम् ॥
द्विधा जीवा विनिर्दिष्टा जङ्गमस्थावरा बुधैः ।
जङ्गमेऽष्वस्ति मांसत्वं फलत्वमितरेषु च ॥
यद्यन्मांसमिदं प्रोक्तं स स जीवोऽस्त्यसंशयम् ।
यो यो जीवो न तत्तद्धि मांसं सर्वं इति श्रुतम् ॥
यद्वत्पितास्ति गोधोऽत्र स सर्वे पितृको न हि ।
आम्रवृक्षोऽस्तिवृक्षो न सर्वोप्याम्रमयः किल ॥
पेश्यां मांसस्य पक्वायामपक्वायां निगोतजाः ।
उत्पद्यन्ते विपद्यन्ते सद्यः सन्मूर्छिनो नराः ॥
पशुर्न हन्यते नैव घा यते नैव दृश्यते ।
अन्यथा भक्षणेनैव दोषो मांसस्य विद्यते ॥४३॥
यो वक्तीति तमाहार्यो मृतस्यापि स्वयं पले ।
दृष्टे स्याद्धिंसको यत्र भक्षिते तत्र किं नहि ॥ ४४ ॥
योऽत्ति मांसं स्वपुष्टिर्चिताह्निमन्निह पलाशिनी ।
दयाधर्मः कुतो वन्हिदग्धेवृक्षे फलादिवत् ॥
तृणांशः पतितश्चास्थि यस्य दुःखायतेतराम् ।
ज्ञातदुःखोऽपि हा ! हन्ति शस्त्रेण श्वापदान्स किम् ॥
यः स्वमांसस्य वृद्धयर्थं परमांसानि भक्षति ।
जिन्हारसग्रहग्रस्तस्तच्चरित्रेण पूर्यताम् ॥
सोऽधमो नरकं गत्वा भुक्त्वा दुःसहवेदनाम् ।
तिर्यग्गतस्ततः पापाद्भ्रमीति भवार्णवे ॥

९२—धर्मसर्वस्वाधिकारजैनशिखर

सूरिकृत श्लोक ९७

हित्वा हारमुदारमौक्तिकमयं तैर्धीयतेऽहिर्गले,

त्यक्त्वा क्षीरमनुष्यभक्ष्यममलं मूत्रं च तैः पीयते ।
भुक्त्वा चंदनमिंदुकुंदविशदं तैर्भूतिरभ्यग्यते,
संत्यक्त्वापरभोज्यमद्भुततरं यैरामिषं भुज्यते ॥
स्वं ज्वालाजटिलेऽनले सुबहुले क्षिप्त्वेहते शीतता,
मुत्संगे भुजगं निधाय सविषं स प्राणितुं कांक्षति ।
कीर्तिं काम्यति चाकृशां कृपणतामासूत्र्य सन्यस्तधी-
र्यः कर्त्तुं करुणामभीप्सति जडो जग्ध्वा पलं प्राणिनाम् ॥ १ ॥
चैतन्यं विषभक्षणादिव मद्योः पानादिव प्राज्ञता, ।
विद्यालस्यसमागमादिव गुणग्रामोऽभिमानादिव ।
शीलं स्त्रीजनसंस्तवादिव मनः क्लेशादिव ध्यानधी-
र्देवार्चाशुचितादि पुण्यमखिलं मांसाशनान्नश्यति ·

९३—पद्मनंदपंचविंशतिः ।

आद्या सद्व्रतसंचयस्य जननी सौख्यस्य सत्संपदां ।
मूलं धर्मतरोरनश्वरपदारोहैकनिःश्रेणिका ॥
कार्य्या सद्भिरिहांगिषु प्रथमतो नित्यं दया धार्मिकै-
र्धिङ् नामाप्यदयस्य तस्य च परं सर्वत्र शून्या दिशः ॥ ८ ॥
संसारे भ्रमतश्चिरं तनुभृतः के के न पित्रादयो ।
जाता तद्वधमाश्रितेन खलु ते सर्वे भवंत्याहताः ॥
पुंसाऽत्मापि हतो यदत्रनिहतो जन्मान्तरेषु ध्रुवं ।
हंतारं प्रतिहन्ति हन्त बहुशःसंस्कारतो न क्रुधः ॥ ९ ॥
त्रैलोक्यप्रभुभावतोऽपि सरुजोप्येकं निजं जीवितं ।
प्रेयस्तेन विना स कस्य भवितेत्याकांक्षतः प्राणिनः ॥
निःशेषव्रतशीलनिर्मलगुणाधारा ततो निश्चितं ।
जंतोर्जीवितदानतस्त्रिभुवने सर्वप्रदानं लघु ॥ १० ॥

यादुर्दं ह्रैकचित्तावनमधिवंसति त्रातृसम्बंधहीना ।
भीतिर्य स्यां स्वभावाद्वदनधृततृणानापराधं करोधि ॥
बध्यालस्यापियस्मिन्ननु मृगवनिता मांसपिंडमलोभा-
द्‌खेटेस्मिन् रतानामिह किनु नकिमन्यत्र नो यद्विरुद्धम् ॥२५॥
तनुरपि यदि लग्ना कीटिका स्याच्छरीरे ।
भवति तरलचक्षुर्व्याकुलो यः स लोकः ॥
कथमिह मृगयासानंदमुच्छातशस्त्रो ।
मृगमकृतविकारं ज्ञातदुःखोपि हन्ति ? ॥ २६ ॥

## ९४—पुरुषार्थसिद्ध्युपाय-श्लोक ६८ ।

आमां वा पक्कां वा खादति यः स्पृशति वा पिशितपेशीम् ।
निहन्ति सततनिचितं पिंडं वहुजीवकोटीनाम् ॥

## ९५—वसुनन्दो श्रावकाचार श्लोक ८१ ।

मंसं अमेज्भसरिसं किमिकुलभरियं दुगधवीभच्छं ।
पाएणविणछिवेयं णातरि एतं कह भोत्तुम् ॥

## ९६—परमात्मा प्रकाश श्लोक नम्बर २२६ ।

रायदोसवे परिहरिवि जेसमजीवणियंति ।
ते समभावपरद्विया लहुणिवाणिलहंति ॥

## श्लोक-नम्बर २५३ ।

मारिन्निचूरिविजीवड़ा जन्तुहु दुःख करोसि ।
तं तह पासि अणंतगुणु अवसइं जीवलहीसि ॥ २५३ ॥

## श्लोक-नम्बर २५४ ।

जीवबहंतहंणरयगइ अभयपदाणें सग्गु ।

वेपइजवज्ञादरिसिया जहिं भावइ तहिं लग्गु ॥ २५४ ॥

## ९९—ज्ञानार्णव ।

हिंसैव नरकागारप्रतोलीप्रांशुविग्रहा ।
कुठारीवद्द्विधा कर्तुं भेत्तुं शूलोऽतिनिर्दया ॥ १३ ॥
क्षमादिपरमोदारैर्यमैर्यो वर्द्धितश्चिरम् ।
हन्यते स क्षणादेव हिंसया धर्मपादपः ॥ १४ ॥
अहो व्यसनविध्वस्तैर्लोकः पाखंडिभिर्बलात् ।
नीयते नरकं घोरं हिंसाशास्त्रोपदेशकैः ॥ १६ ॥
तपोयमसमाधीनां ध्यानाध्ययनकर्मणाम् ।
तनोत्यविरतं पीडां हृदि हिंसा क्षणास्थिता ॥ १५ ॥
शान्त्यर्थं देवपूजार्थं यज्ञार्थमथवा नृभिः ।
कृतः प्राणभृतां घातः पातयत्यविलम्बितम् ॥ १८ ॥
हिंसैव दुर्गतेर्द्वारं हिंसैव दुरितार्णवः ।
हिंसैव नरकं घोरं हिंसैव गहनं तमः ॥ १६ ॥
सौख्यार्थे दुःखसंतानमङ्गलार्थेऽप्यमङ्गलम् ।
जीवितार्थे ध्रुवं मृत्युं कृता हिंसा प्रयच्छति ॥ २२ ॥
तितीर्षति ध्रुवं मूढः स शिलाभिर्नदीपतिम् ।
धर्मबुद्ध्याऽधमोयस्तु घातयत्यङ्गिसंचयम् ॥ २३ ॥
प्रमाणीकृत्य शास्त्राणि यैर्वधः क्रियतेऽधमैः ।
सह्यते परलोके तैः श्वभ्रे शूलाधिरोहणम् ॥ २४ ॥
निर्दयेन हि किं तेन श्रुतेनाचारणेन च ।
यस्य स्वीकारमात्रेण जन्तवो यान्ति दुर्गतिम् ॥२५॥
चरुमन्त्रौषधानां वा हेतोरन्यस्य वा क्वचित् ।
कृता सती नरैर्हिंसा पातयत्यविलम्बितम् ॥ २७ ॥

धर्मबुद्ध्याऽधर्मैः पाप जन्तुघातादिलक्षणम् ।
क्रियते जीवितस्यार्थे पीयते विषमं विषम् ॥ २९ ॥
श्रूयते सर्वशास्त्रेषु सर्वेषु समयेषु च ।
अहिंसालक्षणो धर्मः तद्विपक्षश्च पातकम् ॥ ३१ ॥
अहिंसैव जगन्माताऽहिंसैवानन्दपद्धतिः ।
अहिंसैव गतिः साध्वी श्रीरहिंसैव शाश्वती ॥ ३२ ॥
अहिंसैव शिवं सूते दत्ते च त्रिदिवश्रियम् ।
अहिंसैव हितं कुर्याद् व्यसनानि निरस्यति ॥ ३३ ॥
सप्तद्वीपवतीं धात्रीं कुलाचलसमन्विताम् ।
नैकप्राणिवधोत्पन्नं दत्वा दोषं व्यपोहति ॥ ३४ ॥
आत्मैवोत्क्षिप्यते नाशु प्रक्षिप्तः श्वभ्रसागरे ।
स्नेहभ्रमभयेनापि येन हिंसा समर्थिता ॥ ३६ ॥
बलिभिर्दुर्बलस्यात्र क्रियते यः पराभवः ।
परलोके स तैस्तस्मादनन्तर्हि प्रविपद्यते ॥ ३८ ॥
भयवेपितसर्वाङ्गाननाथान् जीवितप्रियान् ।
निघ्नद्भिः प्राणिनः किं तैः स्वज्ञातमजरामरम् ॥३९ ॥
परमाणोः परं नाल्पं न महद्गगनात्परम् ।
यथा किञ्चित्तथा धर्मो नाहिंसालक्षणात्परः ॥ ४१ ॥
तपःश्रुतयमज्ञानध्यानदानादिकर्मणाम् ।
सत्यशीलव्रतादीनामहिंसा जननी मता ॥ ४२ ॥
निस्त्रिंश एव निस्त्रिंशं यस्य चेतोऽस्ति जन्तुषु ।
तपःश्रुताद्यनुष्ठानं तस्य क्लेशाय केवलम् ॥ ४४ ॥
द्वयोरपि समं पापं निर्णीतं परमागमे ।
वधानुमोदयोः कर्त्रोरसत्संकल्पसंश्रयात् ॥ ४५ ॥
अहिंसैकाऽपि यत्सौख्यं कल्याणमथवा शिवम् ।

दत्ते तद्देहिनां नायं तपः श्रुतयमोत्करः ॥ ४७ ॥
जन्मोग्रभयभीतानामहिंसैवौषधिः परा ।
तथाऽमरपुरीं गन्तुं पाथेयं पथि पुष्कलम् ॥ ४९ ॥
किन्त्वहिंसैव भूतानां मातेवं हितकारिणी ।
तथा रमयितुं कान्ता विनेतुं च सरस्वती ॥ ५० ॥
स्वान्ययोरथ नालोक्य सुखं दुःखं हिताहितम् ।
जन्तून् यः पातकी हन्यात्स नरत्वेऽपि राक्षसः ॥५१॥
जायते भूतपः पुंसो या कृपाक्रान्तचेतसः ।
चिरेणापि न तां वक्तुं शक्ता देव्यपि भारती ॥ ५२ ॥
किं न तप्तं तपस्तेन किं न दत्तं महात्मना ।
वितीर्णमभयं येन प्रीतिमालम्ब्य देहिनाम् ॥ ५४ ॥
यथा यथा हृदि स्थैर्यं करोति करुणा नृणाम् ।
तथा तथा विवेकश्रीः परां प्रीतिं प्रकाशते ॥ ५५ ॥
तन्नास्ति जीवलोके जिनेंद्रदेवेन्द्रचक्र ! कल्याणम् ।
यन्नाप्नुवन्ति मनुजा हि जीवरक्षानुरागेण ॥ ५७ ॥
यत्किंचित्संसारे शरीरिणां दुःखशोकभयबीजम् ।
दौर्भाग्यादिसमस्तं तद्धिंसासंभवं ज्ञेयम् ॥५८॥

## १०० वैराग्य-शतक

आकाशेपि चिराय तिष्ठति शिला मंत्रेण तंत्रेणवा ।
वाहुभ्यामपि तीर्यते जलनिधिः वेधा प्रसन्नो यदा ॥
दृश्यन्ते गृहयोगतः सुरपथे मह्वेपि तारास्फुटं ।
हिंसायां पुनराविरस्ति नियतं गन्धोऽपि न श्रेयसः ॥ १ ॥
ज्ञानमेव परं मित्रं काय एव परः परः ।
अहिंसैव परोधर्मः योषिदेव पराजरा ॥ २ ॥
संसारे गहनेऽत्र वित्र गतिषु भ्रान्त्यानया सर्वथा ।
रे रे जीवन सोऽस्तिकश्चन जगन्मध्ये प्रदेशो ध्रुवम् ॥
यो नाप्तस्तव भूरि जन्म मरणै स्तत्किं न तेऽद्यापिहि ।
निर्वेदो यदि विद्यते यदनिशं हिंसा क्रियाणां रतिः ॥ ३ ॥

## १०१ सागार धर्मामृत प्रथमाध्याय

प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन भूतानां दयां कुर्वन्ति मानवः ॥ ४ ॥
श्रूयताम् धर्मसर्वस्वं श्रुत्वा चैवावधार्य्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ ५ ॥
अवृत्ति व्याधि शोकार्ता ननु वर्तेत शक्तितः ।
आत्मवत् सततंपश्येदपि कीटपिपीलिका ॥ ६ ॥



# जीवरक्षा-दर्पण

## २ भाग

### हिन्दू तथा जैन शास्त्रों के प्रमाण पूर्वक हिंसा तथा बलिदान का

# निषेध

### १ अथर्ववेद मन्त्र० १

जल, स्थल, तथा आकाश में घूमने वाले और अनेक रूपों के धारण करने वाले जो जन्तु-समूह इधर उधर सब ओर भ्रमण करते रहते हैं, उनके शरीर को बलवान पुरुष न सताये। किन्तु मुझे सन्तुष्ट करने के लिये उन्हें पोषित करें। यह परमात्मा की ओर से सब जीवों के प्रति उपदेश है कि-हे जीवो! दया से सर्व सुख सम्पत्ति प्राप्त होती है, मेरी प्रीति के और अपने सुख-लाभ के लिये किसी भी प्राणी को सताने की चेष्टा न करो॥ इत्यादि ॥ १ ॥

### २ अथर्ववेद मन्त्र० ३

जो कच्चे मांस को खाते हैं-और जो हिंसक-इस कार्य में सहायता देते हैं, वे दूसरों की सन्तान को खाते हैं। उन्हें इस पापके कारण अवश्य हम दण्ड देंगे॥ १ । २० । ६ ॥

### ३ अथर्ववेद ४॥

जिस प्रकार मद्यपान, द्यूत-क्रीड़ा, और अनियमित स्त्री-प्रसङ्ग से मानसिक शक्तियोंका ह्रास होताहै उसी प्रकार मांस भक्षणसे भी॥३॥

## ४ वेदधर्मोपदेश

किसी प्राणी को भी वध न करो।

## ५ यजुर्वेद

जो लाग जीव-हिंसा करते हैं, वे, मरकर उन लोकों की यात्रा करते हैं जिनमें प्रकाश का लेश नहीं और जो सूची-भेद्य (जिस में सूई की नोक भीं न समा सके ) अन्धकार से आच्छन्न (ढके) हैं।

जो सर्व प्राण-धारियों को अपने में स्थित और निजात्मा को अन्य सब जीवों में अधिष्ठित समझता है वह उस परमात्मा से किसी प्रकार की शङ्का नहीं रखता। ( उसके लिये सब मार्ग साफ़ हैं)॥

## ६—यजुर्वेद १८-३

मैं मित्र की दृष्टि से सब प्राणियों को देखु॑ ॥

## ७ यजुर्वेद ब्राह्मण

जिस पुरुष की यज्ञ में हिंसा की, क्या वह पुरुष हुआ ? जिस गौ, घोड़ा, बकरी ,उष्ट, आदि को मारा क्या वे, वेही रहे? क्या बकरा कभी बलि होकर वन्य-मृग भी हुआ ( अर्थात् इन पूर्वोक्त जीवों की हिंसा करने से कोई लाभ अथवा फल विशेष नहीं होता )। अतएव इन पशुओं का बध नहीं करना चाहिये। ये बिचारे अबोध हैं। अतएव सब पशुओं के बध के स्थान पर, व्रीहि ( धान ) तथा जौ से कार्य लेना चाहिये॥

## ७ यज्ञों के नामों के अर्थ।

अश्व नाम ईश्वर का है तथा गौ शब्द का अर्थ रत्न गौ और पृथ्वी है नरमेध अतिथि यज्ञ को कहते हैं साथ वर्ष के पुराने धानों का अज कहते हैं।

## ८ व्याकरणादि

१ अश्व नाम परमात्मा का है। उस में बुद्धि की धारणा जिस यज्ञ में की जाय वही 'अश्वमेध' कहाता है॥

२ गौ नाम इन्द्रियों का है उनका दमन जिस यज्ञ में किया जाय वह 'गोमेध' है ॥

३ 'नरमेध' अतिथि यज्ञ को कहते हैं ॥

४ सात वर्ष के पुराने धान ( अज ) कहाते हैं। उन धानों की आहुति देना 'अजमेध' है, बकरा काटना नहीं।

९ वैशेषिक सूत्र ॥ ७ ॥

हिंसा बुरी वस्तु है। उसके नाम लेने से दोष लगता है ॥

१० योग-साधन पाद, सूत्र-३०॥

अहिंसा, सत्य, चोरी का परित्याग, ब्रह्मचर्य और दान न लेना यम हैं ॥

११ पातञ्जल योगदर्शन साधनपाद सूत्र ॥ ३५ ॥

अहिंसा रूप प्रथम 'यम' को साङ्गोपाङ्ग सिद्ध कर लेने से यह फल होता है कि उस पुरुष के साथ भी किसी का वैर नहीं रहता

१२ व्यास भाष्य

सदैव सभी प्राणियों के साथ, सब भांति ( मन, कर्म, वचन ) से द्रोह न करना अहिंसा कही जाती है ॥

१३ व्यास वाक्य

जो जड़-बुद्धि प्राणियों की हत्या करके धर्म-लाभ करना चाहता है वह काले सांप के मुख रूपी खोखले से अमृत की वर्षा प्राप्त करना चाहता है ॥

१४ व्यास वाक्य

१८ पुराणों में व्यास के दो ही वचन हैं—वे ये कि 'परोपकार भलाई है और 'दूसरे को सताना बुराई है' ॥

१५ वेदान्त शास्त्र

जो लोग पशुओं को बलि देते हैं वे घोर अन्धकार में डूबे हुए हैं। 'हिंसा' न कभी 'धर्म' हुई न होगी ॥

## १६ दान धर्म

जो यज्ञ और वैदिक मार्ग से अपरिचित पुरुष मांस के लोभ से पशुओं को मारे वह अवश्य नरकगामी होगा ॥

## १७ वृहत्पाराशरसंहिता

जो मूर्ख प्राणि-हत्या करके मांस से अपने पितरों को परितृप्त करना चाहता है, वह, चन्दन जला कर उसके कौले बेचना चाहता है

जैसे बालक कोई वस्तु कुएं में फेंक कर, फिर उस की लेने की इच्छा करता हुआ अज्ञान के कारण स्वयं भी उस में गिर जाता है- इसी भांति, मांस से श्राद्ध करने वाला भी ॥

## १८ वशिष्ठ-वाक्य

"जीवन भर जो मनुष्य, विष समझ कर, मांस का भक्षण न करे वह अवश्य स्वर्ग-सुख-भोग प्राप्त करता है यह भगवान् वशिष्ठ जी का मत है।

## १९ वशिष्ठवाक्य

जो ब्राह्मण, क्षमा मानो दमन से युक्त हों, जितेन्द्रिय और वेद विद्या के पण्डित हों, प्राणिहिंसा न जानते हों, दान लेते जिनका हाथ सङ्कोच करता हो, वे ब्राह्मण संसार-सागर से पार करने को समर्थ हैं।

## २० अगस्तमुनि

सत्य तीर्थ है, क्षमा तीर्थ है, इन्द्रिय निग्रह भी तीर्थ है। सर्वदेह धारियों पर दया करना भी तीर्थ है, सरलता सब तीर्थों से बढ़ कर तीर्थ है, दान तीर्थ है। मन का वशीकरण भी तीर्थ है, ब्रह्मचर्य्य बड़ा तीर्थ है, प्रिय भाषण भी तीर्थ है, ज्ञान तीर्थ है, धैर्य्य तीर्थ है, पुण्य भी-कहते हैं-तीर्थ भी है। किन्तु मनकी विशुद्धता सकल तीर्थों से बढ़ कर है। हे देवि! मन के तीर्थों के लक्षण तुम्हें, ये सब बता दिए ॥

२१ चाणक्य नीति पूर्वार्धं अध्याय ८ श्लोक २२ ॥-

मांस खाने वाले, मद्यपान करने वाले, मूर्ख, पुरुष की सी आकृति वाले वस्तुतः पशुओं के भार से पृथिवी दबी जाती है ॥

२२ चाणक्यनीति

दया की जिस में चर्चा न हो, उस धर्म को स्वीकार न करे ॥

२३ वैद्य चूडामणि खण्ड ३ श्लोक १२१

मनुष्यों का भोजन केवल अन्न ही बताया गयाहै, मांस से रक्त का प्रकोप और उस से कुष्ठ उत्पन्न होजाता है ॥

२४ वाग्भट्ट सूत्रस्थान अ० २१ श्लो० २१—२२

हिंसा, चोरी, कुशील, चुग़ली और कठोर वचन झूंठ बोलना ज्यादह बकना, जान्दारों को तकलीफ पहुंचाने का ख्याल ईर्षा, ईश्वर को न मानना यह दश पाप हैं। २१

इस प्रकार कहे हुए दश पाप कर्मों, मन, वाणी तथा कर्म तीनों प्रकार त्याग दे, जो बे रोज़गार हों, व्याधि-ग्रस्त और शोक पीड़ित हों, उन्हें यथा शक्ति प्रसन्न करने की चेष्टा करे ॥ २२

२५ रघुवशकाव्य सर्ग २

दुःख से बचाने वाला क्षत्रिय शब्द तीनों लोकों में विख्यात है। जो क्षत्रिय दुःख न मेट सके उस के राज्य करने से क्या ? निन्दा से दुखित हुए प्राणों से भी क्या अर्थ है ?

२६ श्लोक भर्तृहरिः

प्राण लेने से विमुखता, दूसरे के धन का हरण करने से अश्रद्धा सत्य भाषण, समय पर यथा शक्ति दान, दूसरों की स्त्रियों के विषय में बात चीत न करना, तृष्णा के प्रवाह को रोकना, बड़े जनों से नम्र रहना, सब प्राणियों पर कृपा रखना ये धर्म के साधारण मार्ग हैं जिनका समर्थन सभी शास्त्र करते हैं, ॥

२२७ अत्रिस्मृति

प्राणि-बध न करना कराना सत्य भाषण करना, चोरी का परि-

त्याग, ब्रह्मचर्य का सेवन, तथा दान न लेना, हृदय की शुद्धि, परमात्मा का प्रेम, सन्तोष और सरल प्रकृति होना धर्म के लक्षण हैं॥

२८ याज्ञवल्क्यस्मृति

सुख की इच्छा रखने वाले पुरुप को जिस प्रकार निजात्मा उसी प्रकार दूसरे को भी देखना चाहिये। सुख दुःख तो जिस प्रकार अपने को हैं उसी प्रकार दूसरे को भी होते हैं॥

झूठ बोलना, पराई स्त्री, अभक्ष्य पदार्थ का खाना, अगम्य (चांडाली आदि स्त्री का गमन, मद्यादि न पीने योग्य वस्तुओं का पान चोरी और हिंसा॥

वेद-निषिद्ध कर्म करना और मित्र धर्मों का उल्लंघ ये सर्व निन्दित कर्म हैं मनुष्य यदि अपना भला चाहे तो इन्हें कदापि न करे॥

२९ याज्ञवल्क्यस्मृति

## आचाराध्याय

अहिंसा, सत्यभाषण, चोरी का परित्याग, पवित्रता, इन्द्रियों का वशीकरण, दान, दया, मनः साधन, क्षमा ये सब धर्मों के साधनहैं॥

३० याज्ञवल्क्यस्मृति

ब्राह्मण मांस को छोड़ने से सब कामनाओं को सिद्ध कर लेताहै। गृह में निवास करने पर भी वह मांस त्यागी ब्राह्मण मुनि ही है॥

३१ याज्ञवल्क्यस्मृति अध्याय ६ श्लोक ८

यज्ञ, सदाचार, अहिंसा, दान, स्वशास्त्र-दर्शन इन सब से बढ़ कर धर्म योग से निजात्मस्वरूप का परिज्ञान है॥

३२ याज्ञवल्क्य संहिता।

कर्म, वाणी तथा मन से सदैव सब प्राणियों को क्लेश न देना योगिजनों ने अहिंसा बताया है॥

३३ मनु वाक्य

जो देह धारी किसी को भी हिंसा नहीं करता वह जिस का ध्यान करता है, जो कुछ करता है, जिस में प्रेम करता है उसे बिना प्रयत्न के प्राप्त करलेता है ॥

३४ मनुस्मृति

इन्द्रियों को वश में करने, रागद्वेष को त्यागने, और सब प्राणियों की हिंसा की चेष्टा न करने से, मोक्ष-लाभ होता है ॥

३५ मनुस्मृति

जो गवादि प्राणियों को बन्धन, वध और दुःखदान नहीं देता सब के हित की कामना रखने वाला वह मनुष्य अत्यन्त सुख ( मोक्ष ) की प्राप्ति करता है ॥

३६ मनुस्मृति अ० ५ श्लोक ५३

प्रति वर्ष-सौ वर्ष तक अश्वमेध करते रहने से जो पुण्य प्राप्त होता है वही मांस न खाने वाले को मिलता है ॥

३७ मनुस्मृति अ० ५ श्लोक ५१

सम्मति देने वाला, ज़िबह करने वाला, और मारडालने वाला, ख़रीदने बेचने वाला, पकाने वाला, लाने वाला और खाने वाला. ये ८ आठ प्रकार के क़साई होते हैं ॥

३८ यमस्मृति

अहिन्सा में लगा- नित्य हवन करने वाला, अपनी ही स्त्री का निषेवण करने वाला ब्राह्मण ही ब्राह्मण कहाता है ॥

सत्य, सुस्वभाव, क्रूरता न होना,दया-भाव ये गुण जिस ब्राह्मण में हों वही सच्चा ब्राह्मण है ॥

३९ यम किङ्करसम्बाद के अन्तर्गत यम-वाक्य

जो अपने वर्णों के धर्म से विचलित नहीं होता, अपने तथा शत्रु

के पक्ष में एकसा भाव रखता है, कुछ छीनता है- न किसी जीव को मारता हैं, भलीभांति स्थिर चित्त है, उसेही विष्णु का भक्त समझ।

जिस की बुद्धि शुद्ध हो, शान्तात्मा, पवित्राचरणी, सब प्राणियों का हित करने वाला, प्यारा, हितकारी, वचन कहने वाला और किसी प्रकार का अभिमान तथा माया नहीं करता, सदा उसके हृदय में श्री कृष्ण निवास करते हैं॥

## ४० पाराशर यम-स्मृति ॥

मद्य, मांस का विक्रय करना, अभक्ष्य वस्तुओं का भक्षण करना जो स्त्रीगम्या न हो उससे समागम, चोरी ये सब कार्य पाप के कारण हैं॥

जो मनुष्य सभी प्राणियों को प्राण का दान देता है वह उस उत्कृष्ट स्थान को पाता है, जहां श्री कृष्ण महाराज का निवास है॥

## ४१ श्रीमद् भागवत ॥

हे प्रजा के स्वामी राजन्! तुम ने निर्दय होकर जिन सहस्रों पशुओं का यज्ञों में वध किया था उन्हें देखो। तुम्हारी क्रूरता को स्मरण कर यह बाट जोहते हैं। यहां आने पर क्रोध से फुके हुए, तुम्हें लोहे के मूसलों से कूटेंगे। यहां पर अन्य प्राणी यज्ञों को प्राणियों के अतिरिक्त अन्य यवादि धान्य द्रव्यों से सिद्ध किया जाता देखकर भयभीत होते हैं। देखो! अब प्राणों की तृप्त करने की इच्छा रखकर कभी, इन बातों को भूलते हुए किसी को न मारना॥

## ४२ श्रीमद्भागवत

इस से उस प्रकार के उस पुरुष को उचित है कि वह अपना कल्याण और अपने विपत्ती का डर समझते हुए किसी के साथ वैमनस्य न करे॥

